कासितपक्षेषु शयनावर्त्तनादिकं। तदेवं शयनादौ कालचतुष्टयं द्वादश्यां निशादौ नक्षत्रमात्रयोगः। तदभावे निशाद्यनादरेण तिथ्यन्तरे पादयोगः। तस्याप्यभावे द्वादश्यां सन्ध्यायां नक्षत्रमात्रयोगः। तस्याप्यभावे द्वादश्यां सन्ध्यायामेवेति, बोधनन्तु द्वादश्यां रात्रौ रेवत्यन्तपादयोगे दिनतृतीयभागे इति विशेषः। विष्णुधर्म्मोत्तरे, किं तन्मैत्राद्यपादेन दशम्यंशेन योदिवा। पौष्णशेषेण क्लिन्नेन प्रतिपद्यथ योनिशि। इति दशमीप्रतिपदो-र्निषेधादेकादश्यादिपौर्णमास्यन्तानां तिथीनामभ्यनुज्ञानं पद्मपुराणे, सर्व्वदेवशयनादिकमुक्तं यथा, प्रतिपद्धन-दस्योक्ता पवित्रारोपणे तिथिः। श्रियादेव्याद्वितीया तु तिथीनामुत्तमा स्मृता। तृतीया तु भवान्याश्च चतुर्थी तत्सुतस्य च। पञ्चमी सोमराजस्य षष्ठी प्रोक्ता गुहस्य च। सप्तमी भास्करस्योक्ता दुर्गायाश्चा-ष्टमी स्मृता। मातृणां नवमी प्रोक्ता दशमी वासुकेस्तथा। एकादशी ऋषीणान्तु द्वादशी चक्रपाणिनः। चक्रपाणिन इति पणव्यवहारइत्यस्माद्धातोः। त्रयोदशी त्वनङ्गस्य

---

परे न चैतादृशव्युत्पत्त्या प्रतिपदादिग्रहणसम्भवात् तन्मात्रपरत्वं न सम्भवति विशेष्यवाचकपदासमभिव्याहृताषाढ़ादिपदस्य पौर्णमास्या-मेव प्रयोगः साधुरिति वाच्यं प्रागुक्तवचनैकवाक्यतया आषाढ़्यां संवि-शेदित्यत्र निद्रां त्यजति कार्त्तिक्यामित्यत्र द्वादश्यामेव, सन्ध्याकाले द्वादश्यभावे निशाद्यादरेण द्वादश्यां शयनादिकं। किन्तन्मैत्राद्यपादेति वचने दशमीपदप्रतिपत्पदे द्वादशीभिन्नपरे मतान्तरेऽपि तयोर्यथा-श्रुतार्थासङ्गतेः। तन्मते चतुर्द्दशीपौर्णमास्योः मैत्राद्यपाद पौष्णशेष-पादयोरसम्भवेन एकादश्यादिपञ्चकानुमतत्वासम्भवाच्चेति, मम ब्रह्मणः,

शिवस्योक्ता चतुर्द्दशी । मम चैव मुनिश्रेष्ठ पौर्णमासी तिथिः स्मृता । यस्य यस्य तु देवस्य यन्नन्तं तिथिश्च या । तस्य देवस्य तस्मिंश्च शयनावर्त्तनादिकं । अत्र हरिशयनादावाषाढ़ादिविधानात्तत्साहचर्य्यादन्येषामपि तथा । ज्योतिषेऽपि, व्रजति यदा मिथुनं विहाय कर्कं त्यक्त्वा राजविवर्जितां तिथिं सूर्य्यः । भवति तदा नियतं द्विराषाढ़ः सुरशयविधिर्द्वितीये मासि । राज्ञा चन्द्रेण विवर्जितां अमावस्यां । पूर्व्वकृष्णपक्षे मिथुने संक्रान्ते इति शेषः । हरिनाथोपाध्यायास्तु यमः, क्षीराब्धौ शेषपर्य्यङ्के आषाढ़्यां सम्विशेद्धरिः । निद्रां त्यजति कार्त्तिक्यां तयोस्तं पूजयेत् सदा । ब्रह्महत्यासमं पापं क्षिप्रमेव व्यपोहति । हिंसात्मकैश्च किं तस्य यज्ञैः कार्य्यं महात्मनः । प्रस्वापे च प्रबोधे च पूजितोयेन केशवः । आषाढ़शुक्लैकादशीमारभ्य पौर्णमासीपर्य्यन्तं विष्णोर्निद्राग्रहणरूपशयनसमयः । अतएवैकादश्यां शयनमभिधाय तदादिदिनपञ्चके कर्म्मकथनं ब्रह्मपुराणे । वराहपुराणीये तु एकादशीका-

---

व्रजतीति, राजविवर्जितां तिथिममावस्यां त्यक्त्वा मिथुनं विहाय सूर्य्यो यदा कर्कटं यातीत्यन्वयः । तेन कर्कटसंक्रान्तिः शुक्लप्रतिपदादावित्यस्य लाभः । मिथुनसंक्रान्तिश्च पूर्व्वकृष्णपक्षे इति पूरणीयं । ततश्च शुक्लप्रतिपदादिदर्शान्तरूपचान्द्राषाढ़ः रविसंक्रान्तिशून्यत्वान्मलमासः । ततःपरं शुक्लप्रतिपदादिदर्शान्तोऽपि मासः मिथुनस्थरव्यारब्धत्वादाषाढ़ इति द्विराषाढ़ इति द्वितीये मासीति शुद्धत्वात् एवमेव श्रीदत्तोपाध्याया इति स्मृतितत्त्वबुभुत्सयेति एतेनैतद्ग्रन्थस्यनिर्द्दोषत्वमुक्तं तत्त्वनिर्णायकत्वादिति कलियुगपावनावतारश्रीमदद्वैतवंशसम्भवश्रीराधा-

कौनमन्त्रे निद्राग्रहणाभिधानं। यमस्मृतौ पौर्णमास्यां शयनाभिधानं आषाढ़ीपदस्यानुपाधिस्त्वैवं प्रवृत्तेः एवञ्च ब्रह्मपुराणे यद्यप्येकादश्यां प्रबोधनमुक्तं तथापि तदादिदिनपञ्चकमेव प्रबोधसमयः। तेन वराहपुराणे द्वादश्यां प्रबोधाभिधानं। यमस्मृतौ कार्त्तिक्यां प्रबोधाभिधानं समञ्जसमिति एवमेव श्रीदत्तोपाध्यायाः। कल्पतरुकृतस्तु एकादश्यामेव शयनं प्रबोधश्च। यमस्मृतावाषाढीकार्त्तिकीपदमेकादशीपरं आषाढ़स्येयं कार्त्तिकस्येयमिति व्युत्पत्त्या न तत्प्रत्ययानुपपत्तिः अपवादविषये क्वचिदुत्सर्गप्रवृत्तेरित्याहुः। श्रीभगवद्वाक्यं, मच्छयने मदुत्थाने मत्पार्श्वपरिवर्त्तने। फलमूलजलाहारी हृदि शल्यं ममार्पयेत्। फलाहारपदमशनगर्भं तेन सर्व्वथा अनशनपरत्वं। अत्र मलमासादिकृत विशेषोमलिम्लुचतत्त्वेऽनुसन्धेयः ॥ * ॥ विरुद्धं गुरुवाक्यस्य यदत्र भाषितं मया। तत् क्षन्तव्यं बुधैरेव स्मृतितत्त्वबुभुत्सया ॥ * ॥ इतिवन्द्यघटीयश्रीहरिहरभट्टाचार्य्यात्मजश्रीरघुनन्दनभट्टाचार्य्य विरचिते स्मृतितत्त्वे एकादशीतत्त्वं समाप्तम् ॥ * ॥

सम्पूर्णम्।

---

मोहन गोस्वामिभट्टाचार्य्यविरचितैकादशीतत्त्वटिप्पनी संपूर्णा। शकः १७५० शाके व्योमसुताद्रि-चन्द्रपरिमे शर्म्भु मुहुः संस्मरन्। भाद्रे सूर्य्यजवासरेकृततिथौ पक्षेच कृष्णेतरे। राधामोहन शर्म्मणः कृतिमिमां टीकां सुदैकादशीतत्त्वस्यैव धरामरोहरिहरो यत्नाद् व्यलेखीत्स्वयं।

सम्पूर्णम्।